नाम पुस्तकं............विरचितं...............। तैः विरचितं 'मूलं संस्कृतम् नाम पुस्तकं अपि सन्धिविरहितायाँ...............शैल्यां उपनिबद्धं वर्तते। अस्य अपि प्रयोजनं संस्कृतभाषायाः तत्साहित्यस्य च, विशेषतः वेदानां, गौरवस्थापनं एव वर्त्तते।............तेषां अयं प्रयासः सर्वथा स्तुत्यः प्रोत्सा-हनार्हश्च विद्यते इत्यादि।'

(५) पं० रामेश्वर झा, व्याकरण-साहित्याचार्य, ऐम. ए. अध्यक्ष, संस्कृतकालिज, आगरा।

'आचार्य पं० श्यामकुमारमहोदयाः विगतकतिपयेभ्यः वर्षेभ्यः संस्कृत-भाषायाः प्रचाराय नितरां प्रयत्नशीलाः सन्ति, इति जानन्ति, एव संस्कृतज्ञाः। एतदर्थं अनेन महानुभावेन भूयोभूयः अस्मिन् आगरानगरे सम्मेलनं अकारि ............(अखिलभारतीयसंस्कृतमहासम्मेलनं) यस्मिन्...............एकस्य विशुद्धसंस्कृतविश्वविद्यालयस्य कीदृशी आवश्यकता अस्ति, इति सर्वैः समनुभूता, परन्तु समयस्य प्रतिकूलत्वात्............साफल्यं न असादि अनेन, तथापि प्रयतमानः एव आस्ते तदर्थं अपि। अस्मिन् एव प्रसंगे 'कीदृशं संस्कृतम् ?' इति नामधेयं एकं नूतनपुस्तमपि लिखितं............तत्र कियन्तः नवीनाः विषयाः संस्कृतभाषायाः व्यावहारिकत्वसम्पादनाय प्रदर्शिताः, यथा वाक्ये व्यवहारकाले सन्धिराहित्येन एव लेखाः लेखनीयाः व्यवहर-णीयाश्च।............यदि सन्धिः न क्रियते, तर्हि झटिति एव अल्पसंस्कृत-ज्ञानां अपि ज्ञानं जायते।...............सन्धिकरणे शब्दस्य स्वरूपे महत् परिवर्त्तनं जायते यथा 'मर्वन्तेचार्वंवस्थितिः' (मरोः अन्ते चारुः अवस्थितिः) इत्यादि।'

(६) पं० नारायण शास्त्री, काङ्करः, कार्यवाहः, श्री संस्कृतवाग्विव-र्द्धिनी परिषद्, महाराजासंस्कृत-कालिज, जयपुरं।

'...............परं यावत् श्रीमन्तः नेतृरूपे पथिप्रदर्शकरूपे वा अग्रे न आयास्यन्ति तावत् कार्यसिद्धिः संदिग्धा एव। आधुनिकयुगे संस्कृतस्य सरलता भृशं अपेक्ष्यते। सर्वतः इत्थं एव श्रूयते 'संस्कृतं सरलं क्रियतां ! संस्कृतं सरलं क्रियतां तदैव इदं उपयोगि इति। एतत् श्रीमतः आश्रित्य एव कर्त्तुं शक्यते, न अन्यथा...............।'

---